टर मणिमालायाः ६५ संख्यको मणिः ( ज्यौ० वि० ११ )

श्रीमद्भास्कराचार्यविरचिता

# * लीलावती *

ोपपत्ति-सूत्रार्थप्रकाशिका-हिन्दीटीका-सहिता ।

सम्पादकः—

० श्रीसीताराम झा, ज्यौ० आ०

प्रकाशकः—

र खेलाड़ीलाल ऐण्ड सन्स, काशी ।

श्रीमद्भास्कराचार्यविरचिता

# लीलावती

वाराणसेयसंस्कृतविश्वविद्यालयसम्मानितप्राध्यापकेन

ज्यौतिषाचार्य-तीर्थं

पं० श्रीसीतारामझा

कृतया

'सोपपत्ति-सूत्रार्थप्रकाशिका'ख्यया संस्कृतटीकया

'विलासिनी' समाख्यया हिन्दीटीकया च

विभूषिता ।

सा चेयं

काशीस्थ-'मास्टर खेलाड़ीलाल ऐण्ड सन्स,

संस्कृत बुकडिपो' इत्यस्याधिपतिना

गोपालजीद्वारा प्रकाशिता

-संस्करणम् ]

[ मूल्यम् रु० ४-००

# भूमिका



निर्मिता भास्कराचार्यै-र्ज्योतिर्वित्-पद्मभास्करैः ।
'पाटी' लीलावती नाम्ना प्रसिद्धा गणितस्य या ॥
सर्वेऽपि यां तरिं कृत्वा विशन्ति गणितार्णवम् ।
जल-भू-खेट-गोलानां स्थितिं सम्यग् दिदृक्षवः ॥
सर्वत्र भारते चाऽस्मिन् यया कण्ठस्थयाऽधुना ।
अखिलव्यवहारज्ञा भवन्ति शिशवोऽप्यतः ॥
सर्वप्रान्तपरीक्षासु तत्तदध्यक्षकैरपि ।
निर्धारिताऽस्ति तत्त्वज्ञैः पाठ्यग्रन्थेषु सादरम् ॥
यद्यप्यस्याः कृताष्टीका बहुधा बहुभिर्बुधैः ।
काचित् तास्वतिसंक्षिप्ता काचित् पल्लविता वृथा ॥
बहुमूल्यतया जाता नैव सन्तोषदा नृणाम् ।
अतः कतिपयैश्छात्रै-स्तथा छात्रोपकारिभिः ॥
'मास्टरबुक्डिपो'ऽध्यक्षैः काशीस्थैः प्रार्थितोऽन्वहम् ।
सर्वोपकारबुद्ध्येमां न संक्षिप्तां न विस्तृताम् ॥
कृतवान् वासनोपेतां सत्सूत्रार्थ-प्रकाशिकाम् ।
या चोक्त 'बुक्डिपो'ऽध्यक्षैः स्वव्ययेन प्रकाशिता ॥
अनयाऽध्येतृ-वर्गाणा-मुपकारो भविष्यति ।
चेत् तदैव श्रमोऽस्माकं सफलोऽयं भविष्यति ॥
याऽत्र मुद्रणयन्त्रादि-दोषाद् वाऽस्मत्प्रमादतः ।
त्रुटिः सा क्षम्यतां विज्ञैरिति संप्रार्थये, यतः ॥
"स्खलनं गच्छतः क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥" इति ॥

विनीतः—श्रीसीताराम झा ।

त्रिस्कन्धज्यौतिषशास्त्रमर्मज्ञ

आचार्य पं० श्रीसीताराम झा

अभ्यासशौकर्याय सूत्रप्रतीकसहिता

## विषय-सूची ।

[ श्रेढीव्यवहारः ]



[ क्षेत्रव्यवहारः ]

॥ इति ॥

* श्रीर्जयति *

अथ सोपपत्तिसूत्रार्थप्रकाशिकासहिता

# ⋆ लीलावती ⋆

---

टीकाकारकृतमङ्गलाचरणम्

गिरञ्च गौरीं गिरिशं गणेशं गुरूंश्च गीर्वाणगुरुं ग्रहेशम् ।
प्रणम्य पित्रोरपि पादपद्मं प्रवच्मि पाटीगणितोपपत्तिम् ॥

ग्रन्थकारकृत-मङ्गलाचरणम् —

प्रीतिं भक्तजनस्य यो जनयते विघ्नं विनिघ्नन् स्मृत-
स्तं वृन्दारकवृन्दवन्दितपदं नत्वा मतङ्गाननम् ।
पाटीं सद्गणितस्य वच्मि चतुरप्रीतिप्रदां प्रस्फुटां
संक्षिप्ताक्षर-कोमला-ऽमलपदैर्लालित्यलीलावतीम् ॥ १ ॥

सं०—यः स्मृतः ( हृदि ध्यात एव ) भक्तजनस्य विघ्नं विनिघ्नन् ( वि-नाशयन् ) प्रीतिं (प्रमोदं ) जनयते (उत्पादयति ), वृन्दारकवृन्दैः (देवसमूहैः) वन्दिते पदे यस्य तं वृन्दारकवृन्दवन्दितपदं मतङ्गाननं ( गजाननं ) नत्वा चतुरप्रीतिप्रदां ( सुमतिप्रमोददात्रीं ) संक्षिप्तान्यक्षराणि विद्यन्ते येषु तानि कोमलान्यमलानि च पदानीति संक्षिप्ताक्षरकोमलामलपदानि तैः प्रस्फुटां ( सरलां ) लालित्यलीलावतीं ( माधुर्यगुणयुतां ) ( सच्च तद्गणितमिति सद्गणितं तस्य ) सद्गणितस्य ( व्यक्तगणितस्य ) पाटीं ( क्रमपद्धतिं ) वच्मि ( कथयामि ) ॥ १ ॥

भा०—जो स्मरण करने पर ही समस्त विघ्नों को नाश करके अपने भक्त जनों को प्रमोद देते है, एवं देववृन्द से वन्दित है चरण जिनका ऐसे श्रीगणेश जी को प्रणाम करके मैं ( भास्कराचार्य ) संक्षिप्त शब्दों में कोमल और निर्दुष्ट पदों से स्फुट आशय तथा लालित्यलीला ( माधुर्य आदि गुण ) से सहित समस्त व्यवहारोपयुक्त गणित की पाटी (पद्धति ) को कहता हूँ ॥ १ ॥

राज-मुद्रा परिभाषा—

वराटकानां दश कद्वयं (२०) यत् सा काकिणी ताश्च पणश्चतस्रः ।
ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः ॥२॥

भा०—२० कौड़ी की १ काकिणी, ४ काकिणी का १ पण, १६ पण का १ द्रम्म और १६ द्रम्म का १ निष्क ( सुवर्ण मुद्रा ) समझना ॥ २ ॥

तौल परिभाषा—

तुल्या यवाभ्यां कथिताऽत्र गुञ्जा वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ ।
गद्याणकस्तद्द्वयमिन्द्रतुल्यै-(१४)र्वल्लैस्तथैको घटकःप्रदिष्टः॥३॥

भा०—२ जौ की १ गुञ्जा (रत्ती), ३ गुञ्जा का १ वल्ल, ८वल्ल का १ धरण, २ धरणका १ गद्याणक और १४ वल्ल का १ धटक कहा गया है ।।३।।

सुवर्णादि तौल परिभाषा—

दशार्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोडशभिश्च कर्षम् ।
कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः कर्षं सुवर्णस्य सुवर्णसंज्ञम् ॥४॥

भा०—५ गुञ्जा की १ मासा, १६ मासा का १ कर्ष, ४ कर्ष का १ पल समझना । तथा सुवर्ण शब्द से १ कर्ष सुवर्ण समझा जाता है ॥ ४ ॥

मागदैर्घ्यमान परिभाषा—

यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम् ॥५॥
स्याद्योजनं क्रोशचतुष्टयेन तथा कराणां दशकेन वंशः ।
निवर्त्तनं विंशतिवंशसंख्यैः क्षेत्रं चतुर्भिश्च भुजैर्निबद्धम् ॥६॥

भा०—८ यवोदर का १ अङ्गुल, चौबीस ( ६×४=२४ ) अङ्गुल का १ हाथ, ४ हाथ का १ दण्ड, २००० दण्ड का १ कोश, ४ कोश का १ योजन होता है । तथा—१० हाथ का १ वंश और २० वंश लम्बाई तथा २० वंश चौड़ाई वाला चतुष्कोण क्षेत्र १ निवर्तन कहलाता है ॥ ५—६ ॥

अन्नादि माप में उपयुक्त घनहस्त आदि परिभाषा—

हस्तोन्मितैर्विस्तृतिदैर्घ्यपिण्डैर्यद् द्वादशास्त्रं घनहस्तसंज्ञम् ।
धान्यादिके यद् घनहस्तमानं शास्त्रोदिता मागधखारिका सा॥७॥
द्रोणस्तु खार्याः खलु षोडशांशः स्यादाढको द्रोणचतुर्थभागः ।
प्रस्थश्चतुर्थांश इहाढकस्य प्रस्थांघ्रिराद्यैः कुडवः प्रदिष्टः ॥८॥

भा०—१ हाथ लम्बाई, १ हाथ चौड़ाई और १ हाथ ऊँचाई अथवा गहराई जिसमें हो, वह १ घनहस्त कहलाता है, जिसके नीचे, ऊपर और मध्य में सब मिलकर १२ कोण होते हैं। जैसे मिट्टी के तेल का कनष्टर अथवा ट्रङ्क होता है। इस प्रकार अन्न आदि तौलने (मापने) के लिये जो घनहस्त बनाया जाता है उसे शास्त्रकथित मगध देश प्रचलित खारी कहते हैं। उस खारी का षोडशांश को द्रोण, द्रोण का चतुर्थांश आढ़क, आढ़क का चतुर्थांश प्रस्थ और प्रस्थ का चतुर्थांश कुड़व कहलाता है॥ ७—८ ॥

वि०—प्रायः उस समय में १ मनुष्य १ प्रस्थ अन्न भोजन करता था, क्योंकि—"सर्वारम्भास्तण्डुलप्रस्थमूलाः" यह लोकोक्ति प्रसिद्ध है॥

तुरकों की चलाई हुई तौल परिभाषा—

पादोनगद्याणकतुल्यटङ्कैर्द्विसप्ततुल्यैः कथितोऽत्र सेरः ।
मणाभिधानः ख-युगैश्च सेरैर्धान्यादितौल्येषु तुरुष्कसंज्ञा ॥९॥

भा०—पौन (¾) गद्याणक का १ टङ्क, ७२ टङ्क का १ सेर, और ४० सेर का १ मन यह अन्न आदि तौलने के लिये तुरकों की बनाई संज्ञा है॥९॥

आलमगीरसाह की बनाई तौल परिभाषा—

द्व्यङ्केन्दु-संख्यैर्घटकैश्च सेरस्तैः पञ्चभिः स्याद्धटिका च ताभिः ।
मणोऽष्टभिस्त्वालमगीरशाहकृताऽत्र संज्ञा निजराज्यपूषु ॥१०॥

भा०—(पूर्वोक्त) १९२ घटक का १ सेर, ५ सेर की १ घटिका (पसेरी) और ८ पसेरी का १ मन यह आलमगीरसाह ने अपने राज्य में संज्ञा बनाई॥ १०॥

वि०—१ छटाक का १२ वाँ भाग १ धटक होता है। प्रायः इस समय भी बहुत नगरों में यही मान प्रचलित है ॥ १० ॥

२० वराटकाः = १ काकिणी ।
४ काकिण्यः = १ पणः
१६ पणाः = १ द्रम्मः
१६ द्रम्माः = १ निष्कः

५ गुञ्जाः = १ माषः
१६ माषाः = १ कर्षम्
४ कर्षाणि = १ पलम्
१ कर्षम = १ सुवर्णम् ।

---

२ यवौ = १ गुञ्जा
३ गुञ्जाः = १ वल्लः
८ वल्लाः = १ धरणम्
२ धरणे = १ गद्याणकः
१४ वल्लाः = १ धटकः

८ यवोदराणि = १ अङ्गुलम्
२४ अङ्गुलानि = हस्तः
४ हस्ताः = १ दण्डः
२००० दण्डाः = १ क्रोशः
४ क्रोशाः = १ योजनम्
१० हस्ताः = १ वंशः
२० वं × २ वं = १ निवर्तनम् ।

---

यत्र हस्तमिता विस्तृतिः, हस्तमितं दैर्घ्यम्, हस्तमिता चोच्छ्रितिः, एवं
१ घनहस्तः = १ खारी
४ कुडवाः = १ प्रस्थः
४ प्रस्थाः = १ आढकः
४ आढकाः = १ द्रोणः
१६ द्रोणाः = १ खारी ।

$\frac{३}{४}$ गद्याणकः = १ टङ्कः
∴ ३ गद्याणकाः = ४ टङ्काः
७२ टङ्काः = १ सेरः
४० सेराः = १ मणः
१९२ धटकाः = १ सेरः
५ सेराः = १ धटी
८ धटिकाः = १ मणः ।

**शेषाः कालादिपरिभाषा लोकतः प्रसिद्धा ज्ञेयाः ॥ ११ ॥**

भा०—शेष काल आदि की परिभाषाएँ प्रचलित लोकव्यवहार से समझना चाहिये ॥

जैसे—नाक्षत्रकालमान—६० विपल का १ पल, ६० पल की १ घटी, ६० घटी का १ अहोरात्र। एवं सावन से सावन अहोरात्र समझना। ३० अहोरात्र का १ मास, १२ मास का १ वर्ष।

सौरमास—६० विकला की एक कला, ६० कला का १ अंश, ३० अंश की १ राशि, १२ राशि का १ भगण। सूर्य की गति से १ अंश का भोग १ सौर दिन, ३० अंश ( या १ राशि ) का भोग १ मास, १२ राशि ( या भगण ) का भोगकाल १ सौरवर्ष कहलाता है ॥ ११ ॥

यूरोपदेशीय परिभाषा—

**स्वतंत्र भारत की तौल**

१० ग्राम = १ डेकाग्राम।

१० डेका ग्राम या १०० ग्राम
= १ हेक्टो ग्राम

१० हेक्टो ग्राम या १००० ग्राम
= १ किलोग्राम

**अंग्रेजी तौल**

१६ ड्राम = १ औंस
१६ औंस = १ पौंड
१४ पौ० = १ स्टोन
२८ पौ० या २ स्टोन = १ क्वार्टर
४ क्वार्टर = १ हण्डरवेट
२० हण्डरवेट = १ टन

**लम्बाई नापने के पैमाने**

१२ इञ्च = १ फुट
३ फीट = १ गज
२२० गज = १ फर्लाङ्ग
८ फर्लाङ्ग या १७६० गज = १ मील

**परतंत्र भारत का राजकीय मान**

८ खसखस ( पोस्ता का दाना )
= १ चावल
८ चावल = १ रत्ती
८ रत्ती = १ माशा
१२ माशा = १ तोला
५ तोला = १ छटाँक
४ छटाँक = १ पाव

**समय के पैमाने**

६० सेकेण्ड = १ मिनट
६० मिनट = १ घण्टा
२४ घण्टा = १ दिन ( अहोरात्र )
७ दिन = १ सप्ताह
३० दिन या ४ सप्ताह = १ महीना
१२ महीना या ३६५ दिन = १ साल

**डाक्टरी तौल ( द्रव पदार्थों का )**

६० बूंद = १ ड्राम
८ ड्राम = १ औंस
२० औंस = १ पाइण्ट
२ पाइण्ट = १ क्वार्ट
४ क्वार्ट या ८ पाइण्ट = १ गैलन

**डाक्टरी तौल ( शुष्क पदार्थों का )**

२० ग्रेन = १ स्क्रूपिल
३ स्क्रूपिल = १ ड्राम
८ ड्राम = १ औंस
१६ औंस = १ पौण्ड ( लगभग ½ सेर )

४ पाव या १६ छटाँक = १ सेर ।

४० सेर = १ मन

**परतंत्र भारत की मुद्रा**

३ पाई = १ पैसा

४ पैसा या १२ पाई = १ आना

१६ आना = १ रु०

**गिनती के पैमाने**

२० वस्तुएँ = १ कोड़ी

१२ वस्तुएं = १ दर्जन

२५ ताव ( शीट ) = १ दस्ता

२० दस्ता = १ रीम

**स्वतन्त्र भारत की मुद्रा**

१०० पैसा = १ रु०

इति परिभाषा ।

---

## अथाभिन्नपरिकर्माष्टकम् ।

लीलागललुलल्लोलकालव्यालविलासिने ।
गणेशाय नमो नीलकमलामलकान्तये ॥ १ ॥

सं०—लीलया गले लुलन्तो ये लोलाश्चञ्चलाः कालव्यालाः (कृष्णसर्पाः) तेषां विलासो विद्यते यस्मिन् तस्मै तथोक्ताय, अत एव नीलकमलवदमला कान्तिर्यस्य तस्मै नीलकमलामलकान्तये गणेशाय नमोऽस्तु ॥ १ ॥

भा०—क्रीड़ा से कण्ठ में धारण किये हुए कृष्ण सर्प के विलास (शोभा) से युक्त, अतः नील कमल सदृश कान्ति वाले श्रीगणेशजी को प्रणाम करता हूँ ॥ १ ॥

**अथ संख्यास्थानसंज्ञा—**

एक-दश-शत-सहस्रा-ऽयुत-लक्ष-प्रयुत-कोटयः क्रमशः ।
अर्बुदमब्जं खर्व-निखर्व-महापद्म-शङ्कवस्तस्मात् ॥२॥
जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः ।
संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः ॥३॥

भा०—संख्या में अंकों के स्थानों की संज्ञा उत्तरोत्तर दशगुणित ( दहिने से बाएँ भाग क्रम से ) एक, दश शत, सहस्र, अयुत, लक्ष, प्रयुत, कोटि, अर्बुद, अब्ज, खर्व, निखर्व, महापद्म, शङ्कु, जलधि, अन्त्य, मध्य, परार्ध ये व्यवहार के लिये पूर्वाचार्यों ने की है ॥ २-३ ॥

यथा—

| | संस्कृत भाषा संज्ञा |
|---|---|
| १ | एकम्—एकाई ( एक ) |
| १० | दश—दहाई ( दश ) |
| १०० | शतम्—सौ ( सैकड़ा ) |
| १००० | सहस्रम्—हजार |
| १०००० | अयुतम्—दश हजार |
| १००००० | लक्षम्—लाख |
| १०००००० | प्रयुतम्—दश लाख |
| १००००००० | कोटि:—करोड़ |
| १०००००००० | अर्बुदम्—दश करोड़ |
| १००००००००० | अब्जम्—अर्ब |
| १०००००००००० | खर्वम्—दश अर्ब |
| १००००००००००० | निखर्वम्—खर्व |
| १०००००००००००० | महापद्मम्—दश खर्व |
| १००००००००००००० | शङ्कु:—नील |
| १०००००००००००००० | जलधि:—दश नील |
| १००००००००००००००० | अन्त्यम्—पद्म |
| १०००००००००००००००० | मध्यम्—दश पद्म |
| १००००००००००००००००० | परार्धम्—शङ्ख |
| १०००००००००००००००००० | × ×—दश शङ्ख |

उदाहरण—जैसे—५२६७१ इस संख्या में अंकों के ५ स्थान हैं, अतः दहिने भाग से इकाई, दहाई आदि क्रम से गिनने से अन्त वाला अंक ( ५ ) दश हजार ( या अयुत ) के स्थान में पड़ा इसलिये इस संख्या का उच्चारण संस्कृत शब्द में—"पञ्चायुतानि, द्वे सहस्रे, षट्शतानि, एकसप्तति" तथा भाषा में "बावन हजार छः सौ एकहत्तर" इस प्रकार हुआ।

नीचे लखी संख्याओं के उच्चारण अक्षरों में लिखिये—

२५६७२६५ । ५०७६७ । ७८११०६ । २००३०५०

नीचे उच्चारित संख्याओं को अङ्क में लिखिये।

( १ ) पञ्चशतानि चत्वारः। ( २ ) त्रिंशत् सहस्राणि द्वेशते पञ्चाशत्।

इति संख्यास्थानसंज्ञा।

उपपत्तिः—यदा किलैकादिसंख्याबोधार्थं १, २ इत्यादिका अङ्का नैव प्रकल्पिता आसन् तदा स्वस्वहस्तयोर्दशभिरङ्गुलीभिरेव जना गणनाकार्यं सम्पादयन्ति स्म। तत्र च दशाङ्गुलीभिर्दशपर्यन्तं विगण्याग्रे स्वहस्ताङ्गुल्यभावादेकं दशकं प्रकल्प्य पुनरेकाद्यंगुलीभिरेवैकादशादिसंख्याबोधमुत्पादयन्ति स्म। एवं गणनायां काठिन्यमनुभूय केनापीश्वरांशपुरुषेणैकाद्यङ्गुलीस्थाने १, २, ३, ४, ५, ६, ७, ८, ९ इति नवाङ्काः प्रकल्पिताः, दशस्थाने त्वेकदशकज्ञानार्थमेकस्यैव दक्षिणपार्श्वेऽङ्काभावबोधकं बिन्दुरूपं चिह्नं संरक्षितम्। पुनरग्रेऽपि बिन्दुस्थान एवैकाद्यङ्कस्थापनेनैकादशादिसंख्याङ्काः सम्पादिताः। एवं दशदशकावधि गणनासौकर्यं जातम्। ततो दशदशकानां (१००) शतमिति संज्ञा, ततो दशशतकानां ( १००० ) सहस्रमिति संज्ञा। इत्येवमग्रेऽपि दशगुणोत्तरसंख्यास्वेकैकाङ्कस्थानवृद्धित्वात् क्रमात् संख्यास्थानानि दशगुणोत्तराणि सिद्ध्यन्ति। तत्र सर्वेषां व्यवहारजातानां परार्धाभ्यन्तर एव परिगणितत्वात् परार्धपर्यन्तमेव संज्ञाः कृता इति ॥२-३॥

अथ अभिन्नपरिकर्माष्टकम् * तत्रादौ सङ्कलितव्यवकलितयोः

करणसूत्रं वृत्तार्धम्

**कार्यः क्रमादुत्क्रमतोऽथवाङ्कयोगो यथास्थानकमन्तरं वा।**

सं०—क्रमात् अथवा उत्क्रमतो यथास्थानकं ( एव ) अङ्कानां योगः कार्यः, अन्तरं वा कार्यम्।

'जिन दो या अधिक संख्याओं का योग या अन्तर करना हो' उनके क्रम या उत्क्रम से तुल्य स्थानीय अंकों का ही योग या अन्तर करना चाहिये।

---

* परि सर्वत्र कर्म ( क्रिया ) येषां तानि परिकर्माणि तेषामष्टकं ( योगान्तर-गुणन-भजन-वर्ग-वर्गमूल-घन-घनमूलरूपम् ) इति परिकर्माष्टकम्। एतेनैव सर्वव्यवहारो जगति प्रवर्तते।

जैसे—२१५ और २५ का योग और अन्तर करना है तो २१५ को ऊपर और २५ को नीचे रक्खो अथवा २५ को ऊपर और २१५ को नीचे रक्खो किन्तु एक स्थानीय के सामने एक स्थानीय और दश स्थाथीय के सामने दश-स्थानीय इत्यादि तुल्य स्थानीय में तुल्य स्थानीय को जोड़ो या अन्तर करो।

जैसे— २१५
२५
दोनों का योग २४० }

अन्तर २१५
२५
योगफल = ४५५ } स... रख कर भिन्न स्थानियों का योग किया तो यह असम्भव हुआ

उप० —"योगोऽन्तरं तेषु समानजात्योर्विभिन्नजात्योश्च पृथक् स्थितिः स्यात्" इति परिभाषया सजात्योरेवाङ्कयोर्योगोऽन्तरं वा भवितुमर्हति तत्राङ्कयोः सजातित्वं तु स्थानसमत्वमेवेति यथास्थानक्रमेव योगोऽन्तरं वा समुचितमिति॥

अत्रोद्देशकः ( उदाहरणं = प्रश्नः )—

**अये बाले लीलावति मतिमति ब्रूहि सहितान्**
**द्वि-पञ्च-द्वात्रिंशत्त्रिनवतिशताष्टादशदश ।**
**शतोपेतानेतानयुतवियुतांश्चापि वद मे**
**यदि व्यक्ते युक्तिव्यवकलनमार्गेऽसि कुशला ॥१॥**

सं०—२, ५, ३२, १९३, १८, १० एतानंकान् शतेन ( १०० ) उपेतान् सहितानेतांश्च पुनः अयुत (१००००) वियुतान् अयुताद् विशुद्धान् वदेति प्रश्नः।

भा०—हे बाले ! लीलावति ! अये मतिमति ! यदि तुम योग और अन्तर क्रिया में निपुण हो तो २, ५, ३२, १९३, १८, १० इनको १०० के साथ जोड़कर बताओ। और उसी योगफल को अयुत ( दश हजार ) में घटा कर शेष संख्या बताओ ॥ १ ॥ क्रिया नीचे स्पष्ट है—

( योगार्थं ) न्यासः— २ + ५ + ३२ + १९३ + १८ + १० + १०० संयोजनाज्जातः = ३६० = योगः । अयुताच्छोधिते जातम् १००००—३६० = ९६४०—अन्तरम्। इति संकलितव्यवकलिते ॥ १ ॥

अथ गुणने करणसूत्र 'पञ्चधा' सार्धवृत्तद्वयम्—

**गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्तिमादीन् ॥१॥**

सं०—आदौ गुणकेन गुण्यस्यान्त्यमंकं हन्यात् ( गुणयेत् ) एवं उत्सारितेन ( अग्रचालितेन गुणकेन पुनः ) उपान्तिमादीन् ( अंकान् ) हन्यात् ॥

भा०—( जिससे गुना किया जाता है वह गुणक और जिसको गुना किया जाय वह गुण्य कहलाता है ) गुण्य संख्या में जो अन्तिम अंक हो उसको गुणक से गुना करके उसी के सामने रखना, फिर उसी गुणक को आगे बढ़ाकर उपान्तिमादि क्रम से अगले अगले ) अंकों को गुना करके अपने अपने सामने रख कर जोड़ने से गुणनफल होता है ।

वि०—यह क्रिया स्लेट पर अथवा भूमि पर होती है, क्योंकि इस विधि में एक अंक को मिटा कर उसके स्थान में गुणितफल को लिखने में सुविधा होती है ॥

उप०—गुण्यतेऽनेनेति गुणकः । यश्च गुण्यते स गुण्य इति । गुणकसंख्या-तुल्यस्थानस्थितानां गुण्यानां योग एव तयोर्गुणनफलम् । यथा—पञ्चस्थान-स्थितानां सप्तानां योग एव पञ्चसप्तघातः = ७+७+७+७+७ = ७ ( १+१ +१+१+१ ) = ७×५ इति सिद्ध्यत्यत एतादृशयोगविशेषस्थाने सुगम-त्वाद् गुणनक्रियैव समुचिता । तत्र गुणनफलेऽपि समस्थानीयांकयोगौचित्या-दंकसमुत्सारणं सयुक्तिकमेवेति ॥

## द्वितीयप्रकारः—

**गुण्यस्त्वधोऽधो गुणखण्डतुल्यस्तैः खण्डकैः सङ्गुणितो युतो वा ।**

सं०—वा गुणकस्य अभीष्टानि खण्डानि कृत्वा तत्खण्डतुल्यो गुण्योऽधोऽधो निवेश्यः तैः खण्डकैः पृथक् संगुणितो युतो गुणनफलं भवति ।

भा०—अथवा गुणक के दो या अधिक खण्ड करके और खण्डतुल्य स्थानों में गुण्य को रखकर प्रत्येक खण्ड से गुना करके सबको जोड़ने से गुणनफल होता है ।

उप०—कल्प्येते गुण्यगुणकौ अ, क । अनयोर्गुणनफलम् = अ×क, अत्र यदि क = ग + घ, तदा गुणनफलम् = अ×क = अ× ( ग + घ ) = अ×ग + अ×घ । इत्युपपन्नम् ॥

## तृतीयप्रकारः—

**भक्तो गुणः शुध्यति येन तेन लब्ध्या च गुण्यो गुणितः फलं वा ॥२॥**

सं०—अथवा गुणको येनाऽङ्केन भक्तः शुद्धयति तेनाङ्कन लब्ध्या च गुण्यो गुणितः फलं भवति ।

भा०—अथवा जिस संख्या से भाग देने पर गुणक में निश्शेष लब्धि हो उस संख्या से तथा लब्धि से गुण्य को गुना करने से गुणनफल होता है। उदाहरण आगे देखिये ।

उप०—गुणनफलं = गुफ = अ × क । अत्र यदि $\frac{क}{ग}$ | = ल, तदा क = ग × ल अतः गुफ = अ × क = अ × ग × ल, इत्युपपन्नम् ।

चतुर्थप्रकारः—

## द्विधा भवेद्रूपविभाग एवं स्थानैः पृथग्वा गुणितः समेतः ।

सं०—एवं रूपस्य व्यक्ताङ्कस्य विभागो द्विधा भवेत् । (एकः खण्ड-विभागो, द्वितीयः स्थानविभागः) अतः स्थानैः (पृथक् पृथक् स्थानीयाङ्कैः) गुण्यो गुणितः समेतः (स्थानान्तरेण युक्तः) फलं वा भवति ॥

भा०—इस प्रकार संख्या के विभाग दो प्रकार के होते हैं। (एक खण्ड-विभाग और दूसरा स्थान-विभाग) अतः पृथक् पृथक् गुणक के स्थानीय अंकों से गुण्य को गुना करके फिर यथास्थानीय अंकों के योग करने से भी गुणनफल होता है ।। उदाहरण आगे देखिये ।।

उप०—कल्प्यते गुणकः = १२ । गुण्यः = अ । अतो गुणनफलम् = १२ × अ = १० अ + २ अ । इति व्यक्तगुणकस्यैव यतो रूपस्यैव स्थानविभागो भवितुमर्हत्यत एव रूपविभागो द्विधा भवेदित्युक्तम् ।

पञ्चमप्रकारः—

## इष्टोनयुक्तेन गुणेन निघ्नोऽभीष्टघ्नगुण्यान्वित-वर्जितो वा ॥३॥

अथवा—इष्टोनेन गुणकेन गुण्यो निघ्नः सच्चेष्टघ्नगुण्येन सहितः कार्यः । अथवा इष्टयुक्तेन गुणकेन गुण्यो निघ्नः स पुनः इष्टघ्नगुण्येन विवर्जितः कार्य-स्तदा गुणनफलं भवति ॥

भा०—अथवा (अपनी सुविधा के अनुसार) गुणक में अभीष्ट संख्या जोड़कर अथवा घटाकर गुण्य को गुना करे, फिर गुणनफल में उसी अभीष्ट

संख्या से गुणित गुण्य को क्रम से जोड़ने और घटाने से वास्तव गुणनफल होता है ।। उदाहरण आगे देखिये ।।

उप०—कल्प्यते गुण्यः = अ । गुणकः = क । अतः गुफ = अ × क = अ × क ∓ अ × इ ± अ × इ = अ (क ∓ इ) ± अ × इ, इत्युपपन्नम् ।।

अत्रोद्देशकः ( प्रश्नः )

**बाले बालकुरङ्गलोलनयने लीलावति ! प्रोच्यतां**
**पञ्चत्र्येकमिता दिवाकरगुणा अङ्काः कति स्युर्यदि ।**
**रूपस्थानविभागखण्डगुणने कल्पाऽसि कल्याणिनि**
**च्छिन्नास्तेन गुणेन ते च गुणिता जाताः कति स्युर्वद ॥१॥**

सं०—हे बाले बालकुरङ्गलोलनयने लीलावति ! यदि त्वं रूप-स्थान-विभागखण्डगुणने कल्पा समर्थासि तदा पञ्चत्र्येकमिताः ( १३५ ) अंका दिवाकर ( १२ ) गुणाः कति भवन्ति । इति गुणनप्रश्नः ।

तथा—ते गुणिता अंकाः तेन गुणेन छिन्नाः (भक्ताः) कति स्युः । इति च वद । इति भागहारप्रश्नः ।

भा०—हे बाले ! मृगाक्षि ! लीलावति ! यदि तुम संख्या के स्थान विभाग और खण्ड विभागादि गुणन में निपुण हो तो १३५ को १२ से गुना करने से गुणनफल क्या होगा ? और हे कल्याणिनि ! फिर उस गुणनफल में उसी (१२) गुणक से भाग देने पर लब्धि क्या होगी ? सो बताओ ।।

उत्तरार्थं न्यासः—गुण्यः = १३५ । गुणकः = १२ अतो "गुण्यान्त्यमङ्क" मित्यादिना द्वितीयप्रकारेण गुणिते (जातं) गुणनफलम् = १६२० ।

अथवा गुणकस्या( १२ )स्य खण्डे ८।४ आभ्यां पृथग् गुण्ये गुणिते युते च जातं गुणनफलम् = १६२० ।

अथवा—"भक्तो गुणः शुद्धयती"त्यादिना तृतीयप्रकारेण गुणकस्त्रिभिर्भक्तो लब्धिः = ४ अत आभ्यां ( ३ । ४ ) गुण्ये गुणिते जातम् = १३५ × ३ × ४ = १६२० ।

अथवा—"स्थानैः पृथग्वे" त्यादिना चतुर्थप्रकारेण गुणकस्य स्थानविभागाभ्यां १।२ पृथग् गुण्ये गुणिते स्थानान्तरेण युते च जातम् = १६२० ।

अथवा—पञ्चमप्रकारेण इष्टम्=२ एतदूनेन गुणकेन १० अनेन गुण्यो गुणितः १३५० अयं इष्ट (२) गुणितगुण्येन १३५×२=२७० अनेन युतो जातं गुणनफलं पूर्वतुल्यमेव=१६२०

अथवा—इष्टम्=८ एतद्युक्तेन गुणकेन २० अनेन गुणितो गुण्यः २७०० अयं चेष्टगुणितगुण्येन १३५×८=१०८० अनेन वर्जितो जातम्=१६२० =गुणनफलम् । एवं गुणनस्य षट् प्रकाराः सन्ति ।।

अथ भागहारे करणसूत्रं वृत्तम्—

**भाज्याद्धरः शुध्यति यद्गुणः स्यादन्त्यात् फलं तत् खलु भागहारे ।**
**समेन केनाप्यपवर्त्य हारभाज्यौ भजेद्वा सति सम्भवे तु ।। ४ ।।**

सं०—येन गुणितो हरो भाज्यात् शुध्यति तत् भागहारे फलं (लब्धिः) भवति । वा सम्भवे सति केनापि समेनाङ्केन भाज्यहारौ अपवर्त्य भजेत् ।।४।।

भा०—जिस गुणकाङ्क से गुणित हर-अन्त्य भाज्य में घटे वही गुणकाङ्क भाग हार में लब्धि होती है । यदि सम्भावना हो तो हर और भाज्य को किसी तुल्य अङ्क से अपवर्तन देकर भागक्रिया करनी चाहिये ।

जैसे—भाज्य=१६२० । हर=१२ इसका अन्त्य भाज्य १६ है, अतः १६ में १ गुणित भाज्य घटा इस लिये प्रथम लब्धि १, और शेष ४२० में फिर दूसरा भाज्य ४२ इस में ३ गुणित हर घटा अतः दूसरी लब्धि ३, शेष ६० (तृतीय भाज्य) में ५ गुणित हर घटा अतः तृतीय लब्धाङ्क ५ और शेष ० हो गया अतः पूर्ण लब्धि=१३५ ।। स्पष्टज्ञानार्थं भाग क्रिया नीचे देखिये ।।

```
हर   भाज्य   लब्धि
१२) १६२० (१३५
    -१२
    ----
     ४२
    -३६
    ----
      ६०
     -६०
    ----
       ० शेष—
```

उप०—कस्यापि वस्तुनस्तुल्यविभागकरणं ( अर्थात् कियद्गुणहरो भाज्ये वर्तते इति ज्ञानोपायो ) नाम भागहारः । तत्र यस्य भागः कर्तव्यः स भाज्यः। येन भज्यते स भाजकश्छेदो हरो वेत्यादिसंज्ञयोच्यते । भजनात् यत् फलं सा लब्धिरित्यत एव यद् गुणितो हरो भाज्यात् शुध्यति सा लब्धिर्भवितुमर्हत्येवेति साधूक्तम् । तथा कयोरपि संख्ययोस्तुल्यगुणने तुल्यभजने वा सम्बन्धे विकाराभावात् समापवर्तितयोरपि भाज्यभाजकयोर्लब्धौ विकाराभाव एवेत्युपपन्नम् ॥

उदाहरणम्—पूर्वोदाहरणे गुणिताङ्कानां स्वगुणच्छेदानां भागहारार्थं न्यासः।भाज्यः = १६२० । भाजकः१२ (यथोक्तरीत्या) भजनाल्लब्धिः = १३५॥ अथवा भाज्यहरौ त्रिभिरपवर्त्य ५४०/४ स्वहरेण विभज्य लब्धिः = १३५ । चतुर्भिर्वाऽपवर्त्य जातौ भाज्यहरौ ४०५/३ स्वहरेण विभज्य लब्धिः = १३५ पूर्वतुल्यैव ॥

८ अथ वर्गकरणसूत्रम्—

**समद्विघातः कृतिरुच्यतेऽथ स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्नाः।**
**स्व-स्वोपरिष्टाच्च तथाऽपरेऽङ्कास्त्यक्त्वान्त्यमुत्सार्य पुनश्च राशिम्॥**
**खण्डद्वयस्याभिहतिर्द्विनिघ्नी तत्खण्डवर्गैक्ययुता कृतिर्वा ।**
**इष्टोनयुग्राशिवधः कृतिः स्यादिष्टस्य वर्गेण समन्वितो वा ॥६॥**

सं०—समयोर्द्वयोर्घातः कृतिः ( वर्गः ) इत्युच्यते । इति प्रथमप्रकारः । (संख्यायामङ्कस्थानं द्व्यधिकं चेत्) तदाऽन्त्यस्य वर्गः स्थाप्यः, तथाऽपरेऽङ्का द्विगुणान्त्यनिघ्नाः स्वस्वोपरिष्टात् स्थाप्याः, तमन्त्यं त्यक्त्वा राशिं समुत्सार्य पुनश्चैवमेव क्रिया कार्या, इति द्वितीयः प्रकारः । अथवा—राशेः खण्डद्वयं कृत्वा तत्खण्डद्वयस्यामहितिर्द्विनिघ्नी तत्खण्डद्वयस्य वर्गयोगेन युता सती कृतिर्भवतीति तृतीयप्रकारः । वा राशिः केनापीष्टांकेनोनो युतश्च कार्यस्तयोर्घातः इष्टांकवर्गेण युतः सन् कृतिर्भवतीति चतुर्थप्रकारः ॥

भा०—तुल्य दो अंकों का घात ( गुणन ) कृति ( वर्ग ) कहलाता है । यदि संख्या में दो या अधिक अंक हो तो—उनमें अंतिम अंकका वर्ग करके अपने सामने रखना, तथा द्विगुणित अन्तिम अंक से अन्य अग्रिम अंकों को गुना करके अपने अपने सामने रखकर. अन्तिम अंक को मिटा कर—अन्य अग्रिमांकों को एक एक स्थान आगे बढ़ाकर रखना, फिर उनमें जो अन्त्य

अङ्क हो उसका वर्ग कर—अपने ( उसी अन्त्य अङ्क के ) सामने रखना, तथा फिर द्विगुणित इस अन्तिमाङ्क से अग्रिम अङ्कों को गुना करके अपने अपने सामने रखना। फिर भी संख्या में अङ्क बचे हों तो फिर पूर्वोक्तरीति से उनको एक-एक स्थान आगे बढ़ाकर रख कर पूर्वोक्त क्रिया करे जब तक सब अङ्कों ( अर्थात् पूरी संख्या ) का वर्ग न हो जाय इस प्रकार स्थापित अङ्कों को ( अपने अपने स्थानीय को ) योग करने से संख्या का वर्ग होता है। यह द्वितीय प्रकार हुआ। ( तृतीय प्रकार यह है कि )—जिस संख्या का वर्ग करना हो उसके २ खण्ड करे—उन दोनों खण्ड को परस्पर गुना करके गुणन फलको दूना करे फिर उसमें दोनों खण्ड के वर्गयोग को जोड़ देने से संख्या का वर्ग होता है। ( चतुर्थ प्रकार यह है कि )—जिस संख्या का वर्ग करना हो उसमें—( जिस से गुणन में सुविधा हो उस प्रकार ) किसी इष्ट अङ्क को पृथक् पृथक् जोड़ और घटा कर जो हों उन दोनों का परस्पर गुणन कर गुणनफल में—कल्पित इष्ट अङ्क का वर्ग जोड़ देने से संख्या का वर्ग होता है॥

जैसे—१२ का वर्ग करना है तो प्रथम प्रकार से १२ × १२ = १४४ = यह १२ का वर्ग हुआ।

द्वितीय प्रकार से १२ इसमें अन्त्यअङ्क १ का वर्ग १ के सामने रखा और १ को द्विगुणित करके अग्रिमाङ्क २ को गुना कर २ के सामने रक्खा, फिर २ को एक स्थान आगे बढ़ा कर उसका वर्ग उसी के सामने रख कर योग करने से १४४ यह पूर्व तुल्य ही हुआ। क्रियाप्रदर्शन—$\frac{१२}{१४४}$ यह क्रिया स्लेट (पाटी) पर सुलभ होती है।

तृतीय प्रकार से १२ के दो खण्ड ८ + ४। दोनों का घात ३२ द्विगुणित करने से ६४ इसमें दोनों खण्ड के वर्गयोग ( ६४ + १६ ) = ८० जोड़ने से ६४ + ८० = १४४ यह पूर्वतुल्य ही हुआ॥

चतुर्थ प्रकार से १२ में इष्ट २ जोड़ और घटा कर गुना करने में सुविधा है अतः २ इष्ट कल्पना करके उक्तरीति से १४ × १० + ४ = १४४ यह भी पूर्व तुल्य ही हुआ। इन चारों प्रकार में प्रथम और चतुर्थ प्रकार सुलभ है। द्वितीय प्रकार में विशेष गौरव है। इन चारों प्रकार के लिये चार उदाहरण आगे ग्रन्थकार के हैं॥

उप०—प्रथमप्रकारस्तु गुणनविशेषस्य परिभाषारूप एव । यदि राशिः = अ + क तदास्य वर्गः = $(अ + क)^2$ = (अ + क) × (अ + क) = अ × अ + अ × क + अ × क + क × क = $अ^2 + २अ × क + क^2$ । एतदवलोकनेन "स्थाप्योऽन्त्यवर्गः" इत्यादिद्वितीयप्रकारस्तथा—"खण्डद्वयस्याभिहति" रित्यादितृतीयप्रकारश्चोपपद्येते ।

तथा यदि राशिः = रा । इष्टम् = इ तदा "द्वयोर्योगान्तराहतिर्वर्गान्तरं भवेदिति" नियमात् $रा^2 - इ^2$ = (रा + इ) × (रा − इ) अत $रा^2$ = (रा + इ) × (रा − इ) + $इ^2$ एतेन "इष्टोनयुग्राशिवधः कृति" रिति चतुर्थप्रकारोप्युपपन्नः ॥

अत्रोद्देशकः (प्रश्नः)

**सखे ! नवानां च चतर्दशानां ब्रूहि त्रिहीनस्य शतत्रयस्य ।**
**पञ्चोत्तरस्याप्ययुतस्य वर्गं जानासि चेद्वर्गविधानमार्गम् ॥ १ ॥**

सं०—हे सखे ! यदि त्वं वर्गविधानमार्गं जानासि तदा ९।१४।२९७।१०००५ एतेषां वर्गं पृथक् पृथग् वदेति प्रश्नः ॥

हे सखे ! यदि तुम वर्गक्रिया जानते हो तो ९ का, १४ का, २९७ का तथा १०००५ का वर्ग बताओ ।

उत्तरम्—'समद्विघात' इति प्रथमप्रकारेण स्थाप्योन्त्यवर्ग इत्यादिद्वितीयप्रकारेण च जाताः क्रमेण वर्गाः ८१।१९६।८८२०९।१००१०००२५।

तृतीयप्रकारेण यथा—नवानां (९) खण्डद्वयं ४।५ अनयोराहतिः २० द्विघ्नी ४० खण्डयोर्वर्गयोगेन (४१) अनेनयुतो जातो वर्गः = ८१ एवं सर्वेषाम् ।

चतुर्थप्रकारेण—यथा राशिः २९७ इष्टेन ३ अनेन पृथगूनयुतः २९४।३०० अनयोर्घातः ८८२००, इष्टवर्गेण ९ अनेन युतो जातः ८८२०९ पूर्वतुल्य एव ॥

भा०—९ का वर्ग प्रथमप्रकार से ९ × ९ = ८१ हुआ । तथा १४ के वर्ग करने में द्वितीय प्रकार (स्थाप्योन्त्यवर्ग इत्यादि) से सुविधा है । २९७ वर्ग करने में चतुर्थ प्रकार (इष्टोनयुग्राशिवध इत्यादि) से ही सुविधा है । तथा १०००५ के वर्ग करने में तृतीय और चतुर्थ दोनों प्रकार से सुविधा है । यथा १०००५ के दो खण्ड १००००।५ इन दोनों का घात ५०००० दूना करने से १००००० इस में दोनों खण्ड के वर्गयोग (१०००००००० + २५) =

( १००००००२५ ) इसको जोड़ने से १००१०००२५ यह वर्ग हुआ। तथा ५ इष्ट कल्पना कर के "इष्टोनयुग्" इत्यादि रीति से १०००० × १००१० + २५ = १००१०००२५ पूर्वतुल्य ही हुआ ॥

अथ वर्गमूले करणसूत्रम्—

**त्यक्त्वाऽन्त्याद्विषमात्कृतिं द्विगुणयेन्मूलं समे तद्धृते त्यक्त्वा लब्धकृतिं तदाद्यविषमाल्लब्धं द्विनिघ्नं न्यसेत्। पङ्क्त्यां पङ्क्तिहृते समेऽन्यविषमात् त्यक्त्वाऽऽप्तवर्गं फलं पङ्क्त्यां तद्द्विगुणं न्यसेदिति मुहुः पङ्क्तेर्दलं स्यात् पदम् ॥७॥**

सं०—( यस्याः संख्याया मूलं ग्राह्यं तत्संख्यांकेष्वादितः क्रमेण विषमसम-चिह्नं कृत्वा ) अन्त्याद्विषमाद् यस्य वर्गं विशुध्येत् तद्वर्गं त्यक्त्वा द्विगुणितेन तन्मूलेन समे हृते यल्लब्धं तद्वर्गं तदाद्यविषमात् त्यक्त्वा लब्धं द्विगुणितं पङ्क्त्यां न्यसेत्। पुनः पंक्त्याऽग्रिमसमे भक्ते प्राप्तस्य (लब्धस्य) वर्गं तदन्य-विषमात् त्यक्त्वा तत फलं च द्विगुणं पंक्त्यां न्यसेत्, इत्येवं मुहुः ( आद्य-विषमांकावधि ) क्रिया कार्या। पंक्तेर्दलं पदं मूलं भवति ॥ ७ ॥

भा०—जिस संख्या का वर्गमूल निकालना हो उसके आरम्भ ( दाहिने अंक से बाएँ भाग क्रम ) से विषम ( । ) और सम ( – ) चिह्न लगा कर अन्तिमविषमांक में जिस अंक का वर्ग घटे उसका वर्ग घटा कर उस मूल को दूना करके पंक्ति ( संख्या के वामभाग ) में रख कर उस से अग्रिम समांक में भाग देना * लब्धि का वर्ग अग्रिम विषय में घटावे, पुनः उस लब्धि को दूना करके पंक्ति में रक्खे, फिर संख्या में शेषांक बचे तो पुनः पंक्ति से अग्रिम समांक में भाग देकर लब्धि के वर्ग को उससे अग्रिम विषमांक में घटावे तथा लब्धि को दूनाकर पंक्ति में रक्खे, फिर आगे ऐसी ही क्रिया करे जब तक संख्या के सब अंक समाप्त हो जाय। इस प्रकार ( लब्धांक संख्या अथवा ) पंक्तिका आधा मूल होता है ॥ ७ ॥

---

* भाग देने में लब्धि ऐसी लेनी चाहिये जिस ( लब्धि ) का वर्ग फिर अग्रिम विषय में घट सके।

उप०—इदं मूलानयनं—"स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्ना" इत्यादि वर्गसूत्रस्य विलोमविधिनैवोपपद्यते । यतः स्थानद्वयसंख्यावर्गे ( अ$^2$ + अ × क२ + क$^2$ ) अस्मिन् अन्त्यवर्गो, द्विगुणितान्त्याद्यघात, आद्यवर्गश्च वर्तन्तेऽतोऽत्र वर्गे खण्डत्रये क्षादौ वर्गांकस्ततोऽवर्गांक पुनर्वर्गांक इति क्रमो दृश्यतेऽतो वर्गांको विषमस्थानगतत्वाद् विषमः । अवर्गांकस्तु समस्थानगतत्वात् सम इति । अतोऽन्त्यविषमाद् यस्य वर्गः शुद्ध्येत् सोऽन्त्यांक एव, द्विगुणेन तेन तदग्रिमांके समे भक्ते लब्धिस्तदाद्यांकस्तद्वर्गोऽग्रिमविषमांकात् शुद्ध्यत्येवेति । स्थानद्वयाधिकसंख्यावर्गमूले त्वेवमेवाग्रे पुनः क्रियाप्रवृत्तिरित्युपपन्नम् ॥ ७ ॥

अत्रोद्देशकः ( प्रश्नः )

**मूलं चतुर्णां च तथा नवानां पूर्वं कृतानां च सखे ! कृतीनाम् ।**
**पृथक् पृथग्वर्गपदानि विद्धि बुद्धेर्विवृद्धिर्यदि तेऽत्र जाता ॥ १ ॥**

प्र०—४।९।८१।१९६।८८२०९।१००१०००२५ एषां वर्गांकानां पृथग् वर्गमूलानि वद यद्यत्र मूलानयने तव बुद्धेर्विवृद्धिर्जातेति प्रश्नः ।

ग्रन्थकारः—यथोक्त्या क्रमेण मूलानि २।३।९।१४।२९७।१०००५ ।

भा०—हे मित्र ! यदि तुम्हारी बुद्धि में वृद्धि हुई है तो—४ का, ९ का, और पूर्व किये हुए वर्गों (८१, १९६, ८८२०९, १००१०००२५ इन ) के अलग अलग मूल बताओ ।

यहाँ ८८२०९ इसका मूल निकालना है तो आदि से प्रारम्भ कर विषम (।) और सम (—) चिह्न लगाने से ८८२०९ इसमें ३ अंक पर विषम चिह्न पड़े हैं अतः इसका मूल तीन अंक की संख्या होगी । यहाँ अन्तिम विषम ८ में २ का वर्ग घटाया, मूल २ को दूना करके ४ इससे शेष समांक ४८ में भाग दिया लब्धि ९ इसके वर्ग ८१ को अग्रिम विषमांक ( शेषांक ) १२२ में घटाया और लब्धि ९ को दूना करके पंक्ति में रक्खा तो पंक्ति ५८ हुई इससे फिर अग्रिम शेष समांक ४१० में भाग दिया तो लब्धि ७ इसके वर्ग को शेष अग्रिम विषमांक ४९ में घटाया तो संख्या का अंक समाप्त हो गया लब्धि को दूना करके पंक्ति बनाया तो ५९४ इसका आधा २९७, अथवा क्रमसे

लब्धांक २९७ यह संख्या का मूल हुआ। इसी प्रकार अन्य संख्या का भी वर्गमूल निकालना चाहिये ॥

८ अथ घने करणसूत्रे वृत्तत्रयम्—

समत्रिघातश्च घनः प्रदिष्टः स्थाप्यो घनोऽन्त्यस्य ततोऽन्त्यवर्गः।
आदित्रिनिघ्नस्तत आदिवर्गस्त्र्यन्त्याहतोऽथादिघनश्च सर्वे ॥८॥
स्थानान्तरत्वेन युता घनः स्यात् प्रकल्प्य तत्खण्डयुगं ततोऽन्त्यम्।
एवं मुहुर्वर्गघनप्रसिद्धावाद्याङ्कतो वा विधिरेष कार्यः ॥ ९ ॥
खण्डाभ्यां वा हतो राशिस्त्रिघ्नः खण्डघनैक्ययुक्।
वर्गमूलघनः स्वघ्नो वर्गराशेर्घनो भवेत् ॥१०॥

सं०—समानां त्रयाणां घातो घन इत्युक्तः। (संख्यायामंकस्थानं द्व्यधिकं चेत् तदाऽन्योऽपि प्रकारो यथा) अन्त्यांकस्य घनः स्थाप्यस्ततोऽन्त्यस्य वर्गः स आद्यांकेन त्रिभिश्च गुणितः, पुनः आद्यांकवर्गः कार्यः स त्रिभिराद्याङ्केन चाहतस्तथाद्यांकघनश्च कार्यं एवं सर्वे स्थानान्तरत्वेन (एकैकांकान्तरत्वेन) युताः कार्यास्तदा घनो भवति। (एवमंकद्वयस्य घनं विधाय यदि संख्याया-मन्येऽप्यंकाः स्युस्तदा) तत्खण्डयुगं अन्त्यांकं प्रकल्प्य तदाऽग्रिमांकमाद्यं प्रकल्प्यैवमेव मुहुः क्रिया कार्या। अथवा वर्गे घने वैषविधिराद्यांकतोऽपि कार्यस्तथापि फलं सममेवेति ॥ ८-१० ॥

भा०—तुल्य तीन अङ्कों का घात (गुणन) घन कहलाता है। यदि संख्या में दो अङ्क हो तो अन्तिम अङ्क का घन करके एक स्थान में रखना। फिर उसी अन्तिम * अंक का वर्ग कर उसको आदि अंक से गुना कर फिर ३ से गुना कर 'द्वितीय स्थान में' रखना। फिर आदि अंक का वर्ग करके उसको अन्त्य अंक और ३ से गुना कर 'तृतीय स्थान में' रखना। फिर आदि अंक का घन करना इन सबों (चारों) को एक एक स्थान बढ़ाकर योग करने से २ अंकों की संख्या का घन होता है। यदि संख्या में तीन अंक हो तो दो

* दहिने भाग का (एक स्थानीय) अंक आदि और वाम भाग वाला अन्त्य कहलाता है।

अंकों की संख्या को अन्त्य और तृतीय अंक को आदि मान कर उक्त रीति से क्रिया करने से तीन अंकों की संख्या का वर्ग होता है। यदि चार अंक की संख्या हो तो फिर ३ अंकों की संख्या को अन्त्य और चतुर्थ अंक को आदि मानना। एवं आगे भी समझना। यह घनक्रिया का द्वितीय प्रकार हुआ। अथवा जैसे अन्त्य अंक से क्रिया का आरम्भ किया गया है उसी प्रकार आद्य अंक से भी आरम्भकर क्रिया करे, परन्तु इस प्रकार में अंकों को एक-एक स्थान पीछे (वाम भाग) हटा कर, रख करके योग करना चाहिये। 'तृतीय प्रकार' यह है कि—जिस अंक का घन करना हो उसका दो खण्ड करे और पृथक्-पृथक् दोनों खण्ड से संख्या को गुना करके फिर ३ से गुना करे उसमें फिर दोनों खण्ड के वर्गयोग जोड़ देने से घन हो जाता है। यदि वर्गात्मक संख्या (४, ९ आदि) का घन हो तो उस संख्या का वर्गमूल निकाल कर उसका घन करे और फिर उसको उतने ही से गुना करे (अर्थात् वर्ग कर लेवे) तो वर्गांक संख्या का घन होता है ॥ ८-१० ॥

उप०—"समत्रिघातो घनः" इत्यपि गुणनविशेषपरिभाषैव। यदि संख्या $= \text{अ} + \text{क}$ तदोक्तपरिभाषया $(\text{अ} + \text{क})^{३} = (\text{अ} + \text{क}) \times (\text{अ} + \text{क}) \times (\text{अ} + \text{क})$

$= \text{अ}^{३} \times \text{अ}^{२} + \text{क}\ ३ + \text{क}^{२} \times \text{अ}\ ३ \times \text{क}^{२} \cdots$
$= (\text{अ} + \text{क}) + \text{अ} \times \text{क}\ ३ + \text{अ}^{२} + \text{क}^{३}$ } एतेन "स्थाप्यो घनोऽन्त्यस्ये"

त्यादि, "खण्डाभ्यां वा हतो राशि" रित्यादिप्रकारद्वयमुपपद्यते। यदि राशि-वर्गात्मकः तदाऽस्य घनः $= (\text{अ}^{२})^{३} = \text{अ}^{६} = \text{अ}^{३} \times \text{अ}^{३}$; इति "वर्गमूलघनः स्वघ्न" इति चतुर्थप्रकारोऽप्युपपद्यते ॥ ८-१० ॥

अत्रोद्देशकः—

**नवघनं त्रिघनस्य घनं तथा कथय पञ्चघनस्य घनं च मे।**
**घनपदं च ततोऽपि घनाद् सखे! यदि घनेऽस्ति घना भवतो मतिः॥**

प्र०—हे सखे! यदि तव मतिर्घनक्रियायां निपुणाऽस्ति तदा ९।२७।१२५ एतेषां घनं पृथग् वद। तथा घनात् घनमूलं च पृथग् वदेति प्रश्नः।

भा०—हे मित्र! यदि घन क्रिया में तुम्हारी बुद्धि दृढ़ है तो ९ का घन, ३ के घन का घन, और ५ के घन का घन बताओ और उन घनों के पृथक् पृथक् घनमूल भी बताओ।

यहाँ ९ का घन प्रथम प्रकार के ९×९×९=७२९ हुआ। एवं ३ का घन=२७। और २७ का घन=२७×२७×२७=१९६८३। तथा द्वितीय प्रकार से २७ के घन करने के लिये पहिले अन्त्य (२) का घन ८ इसको अलग रखा। फिर २ के वर्ग को त्रिगुणित आदि अंक (७) से गुना कर ८४ इसको दूसरे स्थान में रखा। फिर आदि अंक ७ का वर्ग ४९ इस को त्रिगुणित अन्त्य (२×३) से गुना करके २९४ इसको तृतीय स्थान में रखा। फिर आदि का घन ३४३ इसे चतुर्थ स्थान में रक्खा इन चारों स्थान के अंकों को एक एक स्थान बढ़ा कर रखने से

```
८
 ८४
  २९४
   ३४३
-------
 १९६८३
```

इनका योग करने से यह २७ का घन हुआ।

और उदाहरण स्पष्ट है।

ग्रन्थकारः—सूत्रोक्त्या प्रथमप्रकारेण जाताः क्रमेण घनाः ७२९।१९६८३। १९५३१२५ तथा एषां क्रमेण घनमूलानि ९।२७।१२५।

द्वितीयप्रकारोदाहरणं—यथा राशिः ९ अस्य खण्डे ५।४ आभ्यां गुणितो राशिः १८० त्रिघ्नः ५४० खण्डयोर्घनयोगेन १८९ अनेन युतो जातो घनः ७२९। वा तृतीयप्रकारोदाहरणराशिः २७ अस्य खण्डे २०।७ आभ्यां हतस्त्रिघ्नश्च ११३४० खण्डयोर्घनैक्येन ८३४३ युतो जातो घनः १९६८३। वा चतुर्थप्रकारोदाहरणम् –वर्गराशिः ९, अस्य वर्गमूलस्य घनः २७, अयं स्वघ्नो जातो घनः ७२९। यो वर्गघनः स एव वर्गमूलस्य घनवर्गः। बीजगणितेऽस्योपयोगो भवति।

अथ घनमूले करणसूत्रं वृत्तद्वयम् –

**आद्यं घनस्थानमथाघने द्वे पुनस्तथाऽन्त्याद् घनतो विशोध्य।**
**घनं पृथक्स्थं पदमस्य कृत्वा त्रिघ्न्या तदाद्यं विभजेत् फलं तु॥११॥**
**पङ्क्त्यां न्यसेत् तत्कृतिमन्त्यनिघ्नीं त्रिघ्नीं त्यजेत् तत्प्रथमात् फलस्य**
**घनं तदाद्याद् घनमूलमेवं पंक्तिर्भवेदेवमतः पुनश्च॥१२॥**

सं०—अन्त्यात् घनात् घनं विशोध्य तत्पदं पृथक् पंक्त्यां विन्यस्यास्य कृत्या त्रिघ्न्या तदाद्यांकं विभजेत् फलं (लब्धांकं) तु पंक्त्यां न्यसेत्, तस्यापि लब्धस्य कृतिं अन्त्यांकनिघ्नीं त्रिघ्नीं तत्प्रथमात् त्यजेत्। तस्य फलस्य घनं च

ततद्वाद् घनात् त्यजेत् एवं पंक्तिरेव घनमूलं भवेत् । संख्यायामन्येऽप्यंकाश्चेत्तदातोऽस्मात् क्रिया कार्या ॥ ११-१२ ॥

भा०—( जिस संख्या का घनमूल निकालना हो उस के ) आद्य अंकों से आरम्भ कर एक पर घन का चिह्न ( । ) और उसके आगे दो पर अघन का चिह्न (—) फिर एक पर घन और दो पर अघन चिह्न लगावे । इस प्रकार सव पर चिह्न लगा कर अन्त्य घन में जिसका घन घटे उस घन को घटा कर, मूल को अलग रख कर उसके वर्ग को त्रिगुणित करके जो संख्या हो उस से अगले (अघन) अंक में भाग देना, लब्धि को * पंक्ति में रख कर उसका वर्ग करे और उस ( वर्ग ) का अन्त्य ( मूलांक ) और ३ से गुना करके फिर अगले ( द्वितीय अघन ) अंक में घटावे । और भाग देने में लब्धि जो हुई थी उसका घन अगले घन में घटावे, इस प्रकार पंक्ति का अंक घनमूल होता है । संख्या में और भी अंक वचे तो फिर भी उक्तरीति से क्रिया करे ॥११-१२॥

—।——।

जैसे—१९६८३ इस पर घन और अघन के चिह्न लगाने से अन्त्य घन १९ में २ का घन (८) घटाया फिर २ के वर्ग ४ को ३ से गुना कर १२ इस शेष अग्रिम अघन (११६) में भाग देने से लब्धि ७ को पंक्ति में रखा इसके वर्ग (४९) को अन्त्य (प्रथम मूल=२) से और ३ से गुना कर २९४ को शेष अग्रिम द्वितीय अघन ३२८ में घटाया, और लब्धि ७ का घन अग्रिम घन (शेष घनांक=३४३) में घटाया तो निश्शेष हो गया अतः पंक्ति २७ यह घन मूल हुआ । इसी प्रकार यदि और शेषांक वचे तो पूर्व गृहीत मूल के दो अंकों की संख्या को अन्त्य कल्पना कर आगे क्रिया करनी चाहिये ॥

उप०—इदं मूलानयन तु "स्थाप्यो घनोऽन्त्यस्ये" त्यादि घनप्रकारस्य विलोमविधिनैवोपपद्यते ।

उदा०—पूर्वोक्तघनानां७२९।१९६८३।१९५३१२५ घनमूलानि वदेति प्रश्नः ।

ग्रन्थ०—यथोक्त्या जातानि क्रमेण घनमूलानि ९।२७।१२५ इति ॥११-१२॥

## इत्यभिन्नपरिकर्माष्टकम् ।

भिन्न अंकों की परिभाषा—किसी एक संख्या में दूसरी संख्या के भाग देने

* लब्धि में ९ के भीतर का ऐसा अंक लेना जिससे आगे क्रिया चल सके ।

पर यदि निश्शेष नहीं हो तो प्रथम संख्या ( भाज्य ) के नीचे दूसरी संख्या ( भाजक ) को रख देने से भिन्न संख्या कहलाती है। उसमें भाज्य को अंश, लव तथा भाजक को हर, छेद, छिद्, हार कहते हैं। यथा ९ में ४ का भाग देना है तो ४ से ९ निश्शेष नहीं होता है, अतः $\frac{९}{४}$ यह भिन्नाङ्क हुआ। इसमें ९ अंश और ४ हर कहलाता है ॥

अथ भिन्नपरिकर्माष्टकम्।

तत्रादावंशवर्णनम्। तत्रापि भागजातौ करणसूत्रं वृत्तम्—

**अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्।**
**मिथो हराभ्यामपवर्त्तिताभ्यां यद्वा हरांशौ सुधियाऽत्र गुण्यौ ॥१॥**

सं०—द्वयो राश्योः हरांशौ परस्परहाराभिहतौ कार्यौ एवं समच्छेदविधानं भवति। यद्वाऽत्र सम्भवे परस्परं अपवर्तिताभ्यां हराभ्यां हरांशौ सुधिया गुणनीयौ तथापि समच्छेदविधिर्भवतीति ॥ १ ॥

भा०—जिन दो या अधिक भिन्न संख्या का योग या अन्तर करना हो तो उन भिन्न संख्याओं के परस्पर एक के हर से अन्य संख्या के हर और अंशों को गुना करने से समच्छेद ( सब में तुल्य हर ) हो जाते हैं। अथवा सम्भावना हो तो किसी ( समान ) अंक से हरों को अपवर्तित करके उन अपवर्तित हरों से परस्पर अंश और हर को गुना करे तो भी समच्छेद हो जाते हैं।

वि०—समच्छेद हो जाने पर सब अंशों ( ऊपर वाले अंकों ) का योग अथवा अन्तर करके उसके नीचे तुल्य हुए हर को लिखे तो वही अभीष्ट भिन्नांकों का योग या अन्तर होता है।

यथा—$\frac{४}{३}+\frac{५}{४}+\frac{७}{८}$ इनको योग करने के लिये समच्छेद करना है तो प्रथम संख्या के हर ३ से द्वितीय और तृतीय संख्या के हर, अंश को गुना करने से $\frac{४}{३}+\frac{१५}{१२}+\frac{२१}{२४}$ ऐसा हुआ। इसको फिर द्वितीय हर ४ से प्रथम और तृतीय हर अंशों को गुना करने से $\frac{१६}{१२}+\frac{१५}{१२}+\frac{८४}{९६}$ ऐसा हुआ। फिर तृतीय हर ८ से गुणित प्रथम द्वितीय हर अंशों को गुना करने से $\frac{१२८}{९६}+\frac{१२०}{९६}+\frac{८४}{९६}$ इस प्रकार समच्छेद ( तुल्य हर = साजात्य ) हो गया, अतः सब अंशों को जोड़ कर नीचे हर रखने से $\frac{१२८+१२०+८४}{९६}=\frac{३३२}{९६}$

$= \frac{८३}{२४}$ यह ऊपर निर्दिष्ट भिन्नांकों का योग हुआ। यदि अन्तर करना हो तो इसी प्रकार समच्छेद करके अंशों का अन्तर कर नीचे हर लिखना चाहिये।

विशेष—जहाँ भिन्न संख्या के सब या कुछ हरों में किसी अंक के अपवर्तन की सम्भावना हो तो वहाँ सब हरों का जो लघुतम अपवर्त्य हो उसी को समच्छेद समझना और पृथक् पृथक् प्रत्येक अंश से उस समच्छेद में भाग देकर जो लब्धि हो उस ( लब्धि ) से पृथक् अंशों को गुना करने से अंश होते हैं। उन्हीं अंशों को जोड़ या घटा कर ऊपर लिखना और उक्त लघुतम-अपवर्त्य को हर के स्थान में लिखने से अभीष्ट भिन्न संख्या का योग या अन्तर हो जाता है।

जैसे—ऊपर लिखित $\frac{४}{३}+\frac{५}{४}+\frac{७}{८}$ इन भिन्न संख्या के हर में ४ अंक से द्वितीय और तृतीय हर में अपवर्तन की सम्भावना है, अतः इन तीनों हरों का लघुतम अपवर्त्य समच्छेद होगा। अतः प्रसङ्गवश लघुतम अपवर्त्य निकालने की क्रिया लिख देता हूँ।—जिन अंकों का लघुतम अपवर्त्य जानना हो उनको क्रम से पृथक्, पृथक्, लिख कर उनके वाएँ भाग में एक खड़ी रेखा के बाहर अपवर्तनांक को लिख कर और उन अंकों के नीचे एक तिरछी रेखा देकर, अपवर्तनांक से जिन अंकों में भाग शुद्ध हो जाय उन अंकों में भाग देकर लब्धि को रेखा के नीचे लिखना, तथा जिनमें भाग शुद्ध नहीं हो उन अंकों को भी नीचे लिखना। फिर इन अंकों का दूसरा अपवर्तनांक हो तो उससे पूर्ववत् फिर भाग देकर उसके नीचे लब्धि और अंकों को लिखना। जब अपवर्तन की सम्भावना न हो तब अपवर्तनांक, लब्धि और अपवर्त्य ( रेखा के नीचे के ) अंकों के गुणनफल को लघुतम अपवर्त्य समझना। यथा ३।४।८ इनका लघुतम अपवर्त्य जानना है, अतः ३।४।८ इनमें ४ का अपवर्तन लगता है इसलिये ४ के इनको वाएँ भाग में लिख कर भाग देने से लब्धि १, २ को तथा ३ में भाग शुद्ध नहीं हुआ अतः ३ को रेखा के नीचे लिखा, इन ( नीचे उतारे अंक ) में फिर अपवर्तन नहीं लगा। अतः ४| ३ । ४ । ८

३ । १ । २

४×३×१×२=२४ यह लघुतम अपवर्त्य हुआ। इसमें प्रथम हर ( ३ )

से भाग देने से लब्धि ८ से उसके ऊपर वाले अंश ४ को गुना करने से ३२, तथा द्वितीय हर (४) से भाग देने से लब्धि (६) से उसके अंश (५) को गुना कर देने से ३०, तथा तृतीय हर (८) से भाग देकर लब्धि (३) से उसके अंश (७) को गुना करने से २१ ये क्रम से ३२, ३०, २१ अंश हुए और लघुसमापवर्त्य २४ यह हर हुआ अतः योग करने से

$= \frac{३२ + ३० + २१}{२४} = \frac{८३}{२४}$ पूर्वतुल्य ही हुआ। इसको ऐसे लिखते हैं, यथा—

$$\frac{४}{३} + \frac{५}{४} + \frac{७}{८} = \frac{३२}{२४} + \frac{३०}{२४} + \frac{२१}{२४} = \frac{३२+३०+२१}{२४} = \frac{८३}{२४}।$$

उप०—हरभक्ते भाज्ये निश्शेषलब्धिर्न चेत् सोंऽको भिन्नः (भेदितः) इति कथ्यते। यथा सप्तानां पञ्चमांशः $= \frac{७}{५}$। त्रयाणां चतुर्थांशः $= \frac{३}{४}$ इत्यादि। तद्योगान्तरार्थं समच्छेदत्व (तुल्यहरत्व) मेव साजात्यम्। तत्र भाज्यहरयोस्तुल्यगुणने तुल्यभजनेऽपि सम्बन्धे विकाराभावात् परस्परं हराभ्यां,अपवर्तिताभ्यां वा मियो हराभ्यां गुणितयोर्हरांशयोः समच्छेदत्वं भवितुमर्हत्येव यथा—

$\frac{अ}{क} + \frac{त}{प}$ अत्र यदि $\frac{अ}{क} =$ च। $\frac{त}{प}$ ज, तदा अ = क. च। त = प. ज,

$\therefore$ अ प = क. च. प। त. क. = प. ज. क. $\therefore \frac{अ. प.}{क. प.} =$ च। $\frac{त. क.}{क. प.} =$ ज,

$\therefore \frac{अ \times प}{क \times प} \pm \frac{त \times क}{क \times प} =$ च $\pm$ ज, इति। एवमुत्तराधंमप्युपपद्यते ॥ १ ॥

अत्रोद्देशकः—

**रूपत्रयं पञ्चलवस्त्रिभागो योगार्थमेतान् वद तुल्यहारान्।**
**त्रिषष्टिभागश्च चतुर्दशांशः समच्छिदो मित्र! वियोजनार्थम् ॥१॥**

हे मित्र! ३, $\frac{१}{५}$, $\frac{१}{३}$ इन भिन्नांकों को योग करने के लिये, तथा $\frac{१}{६३}$, $\frac{१}{१४}$ इन दोनों को अन्तर करने के लिये समच्छेद बताओ।

उदाहरण—गणित नीचे संस्कृत में स्पष्ट ही है। यहाँ प्रथम उदाहरण के हरों में अपवर्तन की सम्भावना नहीं है। द्वितीय (अन्तर वाला) उदाहरण के हर (६३, १४) में ७ का अपवर्तन लगता है अतः इन दोनों का उक्त

विधि से लघुतम अपवर्त्य १२६ यह समच्छेद हुआ। और स्पष्ट ही है।

ग्रन्थ०—$\frac{३}{१}$ । $\frac{१}{५}$ । $\frac{१}{३}$ एतेषां योगकरणार्थं $\frac{१}{१४}$ । $\frac{१}{६३}$ अनयोश्चान्तरार्थं समच्छेदविधिं वदेति प्रश्नः।

उत्त०—न्यासः $\frac{३}{१}+\frac{१}{५}+\frac{१}{३}$ परस्परहरगुणितहरांशवशाज्जाताः समच्छेदाः $\frac{४५}{१५}+\frac{३}{१५}+\frac{५}{१५}$ । योगः $=\frac{५३}{१५}=३+\frac{८}{१५}$ ।

द्वितीयोदाहरणेऽन्तरार्थं न्यासः $\frac{१}{१४}-\frac{१}{६३}$, अत्र सप्तापवर्तिताभ्यां हराभ्यां २।९ आभ्यां गुणितौ हरांशौ जातौ समच्छेदौ $\frac{९}{१२६}-\frac{२}{१२६}$ । अन्तरम् $=\frac{७}{१२६}=\frac{१}{१८}$ ॥

अथ प्रभागजातौ करणसूत्रं वृत्तार्धम्—

**लवा लवघ्नाश्च हरा हरघ्ना भागप्रभागेषु सवर्णनं स्यात् ।**

सं०—कस्यचिद् भागस्यापि भागः प्रभाग इत्युच्यते तत्र अंशा अंशैः, हराश्च हरैर्गुणिताः सवर्णनं भवति ॥

भा०—( किसी संख्या के भाग के भी भाग किये जाँय तो वह प्रभाग जाति या भाग प्रभाग गणित कहलाता है ) भाग प्रभाग में अंशों को अंश से और हरों को हर से गुना कर देने से सवर्णन होता है।

जैसे—१ के आधे का तृतीयांश क्या होगा ? तो यहाँ $\frac{१}{१}$ $\frac{१}{२}$ $\frac{१}{३}$ इनके अंशों को अंश से और हरों को हर से गुणन करने पर $\frac{१\times१\times१}{१\times२\times३}=\frac{१}{६}$ हुआ। यही उत्तर हुआ। एवं—१२ के तृतीयांश का चतुर्थांश कितना होगा ? तो इस प्रश्न में $\frac{१२}{१}\times\frac{१}{३}\times\frac{१}{४}=\frac{१२}{१२}=\frac{१}{१}$ उत्तर है।

उप०—कल्प्यते राशिः $\frac{क}{ख}$, अस्य ग गुणितो घ.भागः $=\frac{क\times ग}{ख\times घ}$ अस्य पुन च गुणितो ज भागः $=\frac{क\times ग\times च}{ख\times घ\times ज}$ इत्येवमत्र लवा लवघ्ना हरा हरघ्ना एव जायन्तेऽत उपपन्नम् ॥

अत्रोद्देशकः—

**द्रम्मार्धत्रिलवद्वयस्य सुमते ! पादत्रयं यद्भवेत्**

**तत्पञ्चांशकषोडशांशचरणः सम्प्रार्थितेनार्थिने ।**

दत्तो येन वराटकः कति कदर्येणार्पितास्तेन मे
ब्रूहि त्वं यदि वेत्सि वत्स ! गणिते जाति प्रभागाभिधाम् ॥१॥

सं०—हे सुमते ! सम्प्रार्थितेन येन कदर्येण द्रम्मार्धत्रिलवद्वयस्य पादत्रयं यत् तत्पञ्चमांशकस्य यः षोडशांशो भवेत् तच्चतुर्थांशोऽर्थिने ( याचकाय ) दत्तस्तदा तेन कदर्येण कति वराटका अर्पिता इति मे ब्रूहि, यदि त्वं प्रभागाभिधां जातिं वेत्सि । इति प्रश्नः ।

भा०—हे सुमते ! किसी याचक के द्वारा प्रार्थित होने पर एक कदर्य (कृपण) ने एक द्रम्म के आधे का जो द्विगुणित तृतीयांश उसके त्रिगुणित चतुर्थांश जो हो उसके पञ्चमांश के षोडशांश का चतुर्थांश याचक को दिया तो हे वत्स ! यदि तुम प्रभाग जाति गणित जानते हो तो बताओ कि उस कृपण ने कितने वराटक दिये ? उदाहरण क्रिया नीचे संस्कृत में स्पष्ट है ।

प्र. का. न्यासः—$\frac{१}{१}$ $\frac{१}{२}$ $\frac{२}{३}$ $\frac{३}{४}$ $\frac{१}{५}$ $\frac{१}{१६}$ $\frac{१}{४}$ सूत्रोक्त्या सवर्णिते जातम् $= \frac{६}{७६८०} = \frac{१}{१२८०}$ द्रम्मभागोऽतो वराटकः = १ एको दत्तो वराटकः । इत्युत्तरम् । इति प्रभागजातिः ॥

अथ भागानुबन्धभागापवाहयोः करणसूत्रम्

छेदघ्नरूपेषु लवा धनर्णमेकस्य भागा अधिकोनकाश्चेत् ॥२॥
स्वांशोऽधिकोनः खलु यत्र तत्र भागानुबन्धे च लवापवाहे ।
तलस्थहारेण हरं निहन्यात् स्वांशाधिकोनेन तु तेन भागान् ॥३॥

सं०—चेदेकस्य भागा अधिकोनकाः कर्तव्यास्तदा छेदघ्नरूपेषु लवाः ( ते-भागाः ) धनर्णं ( योज्या वियोज्या वेत्यर्थः ) । अत्र स्वांशः अधिकोनः ( युतो हीनो वा ) तत्र भागानुबन्धे अंशापवाहे तलस्थहारेण हरं निहन्यात् गुणयेत् । तथा स्वांशाधिकोनेन तेन ( हरेण ) भागान् (अंशान्) निहन्यात् ॥

भा०—( जहाँ एक अभिन्न संख्या में दूसरी भिन्न संख्या को जोड़ना हो तो वह भागानुबन्ध, और घटाना हो तो भागापवाह कहलाता है ) यदि किसी एक अंक का कोई भाग दूसरे अंक में जोड़ा या घटाया जाय तो उस भिन्न संख्या के हर रूप ( अभिन्न संख्या ) को गुना करके उसमें भिन्न संख्या के लव ( अंशांक ) को जोड़ या घटा देना चाहिये ।

यदि किसी संख्या में अपना ही कोई भाग जोड़ना या घटाना हो वहां सब से नीचे ( पीछे ) के हर से ऊपर के हर को गुना करे और अंश को हर में घटा कर जो शेष बचे उससे ऊपर के अंश को गुना करे, यदि अधिक हर हो तो फिर उससे ऊपर वाले हर से उक्त क्रिया करे ॥ २—३ ॥

उप०—यत्रैकस्मिन् राशौ अन्यस्यांशो योज्यते स भागानुबन्धः, यत्र च विशोध्यते स भागापवाहः । कल्प्यते क $\pm \frac{ग}{घ}$, अत्र "कल्प्यो हरो रूपमहार-राशेः" इति वक्ष्यमाणेन $\frac{क}{१} \pm \frac{ग}{घ} = \frac{क+घ \pm ग}{घ}$ इत्युपपद्यते । तथा यदि $\frac{क}{ग}$ अस्मिन् स्वकीय एव $\frac{च}{ज}$ भागो धनर्णं तदा $\frac{क}{ग} \pm \frac{क \times च}{ग \times ज}$ तदाऽत्र 'मिथो हराभ्यामपवर्तिताभ्या" मिति 'ग' अनेन हरावपवर्त्य समच्छेदौ विधाय $\frac{क \times ज}{ग \times ज} \pm \frac{क \times च}{ग \times ज} = \frac{क \times (ज \pm च)}{ग \times ज}$ इत्युपपद्यते ॥

**साङ्घ्रिद्वयं त्रयं व्यङ्घ्रि कीदृग्ब्रूहि सवर्णितम् ।**
**जानास्यंशानुबन्धं चेत् तथा भागापवाहनम् ॥ १ ॥**

सं०—यदि त्वं भागानुबन्धं भागापवाहनं च जानासि तदा चतुर्थांश-युतं द्वयं, चतुर्थांशोनं त्रयं च सवर्णितं कीदृगिति ब्रूहि ।

भा०—हे मित्र ! यदि तुम भागानुबन्ध और भागापवाह जानते हो तो २ में $\frac{१}{४}$ जोड़ने से और ३ में $\frac{१}{४}$ घटाने से क्या होगा ? बताओ ॥ यहाँ हर ४ से रूप २ को गुना करके ( ८ को अंश १ में जोड़ने से $\frac{९}{४}$ यह प्रथम प्रश्न का उत्तर हुआ । तथा दूसरे प्रश्न में हर ४ से रूप ३ को गुना कर उसमें अंश १ घटाने से $\frac{११}{४}$ यह उत्तर हुआ ॥

प्र. का.—न्यासः २+$\frac{१}{४}$ सूत्रोक्त्या सवर्णिते जातम् $\frac{९}{४}$ । तथा ३-$\frac{१}{४}$ = $\frac{११}{४}$ ।

अथ स्वांशाधिकोनोदाहरणम्—

**अङ्घ्रिः स्वत्र्यंशयुक्तः स निजदलयुतः कीदृशः कीदृशौ द्वौ**
**त्र्यंशौ स्वाष्टांशहीनौ तदनु च रहितौ स्वैस्त्रिभिः सप्तभागैः ।**

अर्धं स्वाष्टांशहीनं नवभिरथ युतं सप्तमांशैः स्वकीयैः
कीदृक् स्याद् ब्रूहि वेत्सि त्वमिह यदि सखेंऽशानुबन्धापवाहौ॥ २॥

सं०—अंघ्रिः ( चतुर्थांशः ) स्वत्र्यंशयुक्तः स पुनः निजदलयुतः कीदृशः ? इति प्रथमप्रश्नः। तथा द्वौ त्र्यंशौ स्वाष्टांशहीनौ तदनु स्वैस्त्रिभिः सप्तभागै रहितौ कीदृशौ ? इति द्वितीयप्रश्नः। तथा अर्धं स्वाष्टांशहीनं पुनः स्वकीयैर्नवगुणितैः सप्तमांशैर्युतं कीदृक् स्यात् इति ब्रूहि। हे सखे ! यदि त्वं अंशानुबन्धापवाहौ जानासीति तृतीयः प्रश्नः।

भा०—हे मित्र ! यदि तुम अंशानुबन्ध और अंशापवाह जानते हो तो $\frac{१}{४}$ में अपना $\frac{१}{३}$ जोड़ने से जो हो उसमें फिर अपना ( उसी का ) $\frac{१}{२}$ जोड़ने से क्या होगा ? तथा $\frac{२}{३}$ में अपना $\frac{१}{८}$ घटाने से जो हो उसमें फिर अपना $\frac{३}{७}$ घटाने से क्या बचेगा ?। और $\frac{१}{२}$ में अपना $\frac{१}{८}$ घटा कर जो हो उसमें फिर उसी का $\frac{६}{७}$ जोड़ने से क्या होगा ? सो बताओ। इन तीनों प्रश्न का न्यास और सूत्र रीति से क्रिया नीचे स्पष्ट है।

क्रमेण न्यासः—

| | | |
|---|---|---|
| $\frac{१}{४}$ | $\frac{२}{३}$ | $\frac{१}{२}$ |
| $\frac{१}{३}$ | $\frac{१}{८}$ | $\frac{१}{८}$ |
| $\frac{१}{२}$ | $\frac{३}{७}$ | $\frac{६}{७}$ |

सूत्रोक्त्या क्रमेण सवर्णिते जातम्।

$$\frac{१\times ३\times ४}{४\times २\times ३} = \frac{१}{२} = \text{प्र०}$$

$$\frac{२\times ४\times ७}{३\times ७\times ८} = \frac{१}{३} = \text{द्वि०}$$

$$\frac{१\times १६\times ७}{२\times ७\times ८} = \frac{१}{१} = \text{तृ०}$$

इति जातिचतुष्टयम्।

अथ भिन्नसंकलित-व्यवकलितयोः करणसूत्रम्—

योगोऽन्तरं तुल्यहरांशकानां कल्प्यो हरो रूपमहारराशेः।

सं०—तुल्यहराणामेवांशानां योगोऽन्तरं वा कार्यम्। अहारराशेश्च ( हरवर्जितस्य तु ) रूपं ( १ ) हरः कल्पनीयः॥

भा०—जिन संख्याओं में तुल्य हर हों उन्हीं अंशों ( संख्या के ऊपर वाले अङ्कों ) का योग या अन्तर करना चाहिये। तथा जिस संख्या में हर नहीं हो उसके नीचे १ हर कल्पना करनी चाहिये।

उप०-भिन्नाङ्कानां तुल्यहरत्वमेव साजात्यमतस्तादृशानामेव योगान्तरे समुचिते।

अत्रोद्देशकः

**पञ्चांशपादत्रिलवार्धषष्ठानेकीकृतान् ब्रूहि सखे ! समैतान्।**
**एभिश्च भागैरथ वर्जितानां किं स्यात् त्रयाणां कथयाशु शेषम् ॥१॥**

ग्र. का. न्यासः— $\frac{१}{५}+\frac{१}{४}+\frac{१}{३}+\frac{१}{२}+\frac{१}{६}$ समच्छेदं विधाय योगे जातम् $=\frac{२९}{२०}$ । अथैतैर्वर्जितानां त्रयाणां $३-\frac{२९}{२०}=\frac{३१}{२०}$ = शेषम्

भा०—हे मित्र ! $\frac{१}{५}, \frac{१}{४}, \frac{१}{३}, \frac{१}{२}, \frac{१}{६}$ इनका योग बताओ। और उसी योगफल को ३ में घटा कर क्या शेष बचेगा ? वह भी बता दो।

यहाँ सब हरों का, लघुतम अपवर्त्य ६० है, अतः ६० में सब हरों के पृथक् भाग देकर लब्धि से अंशों को गुना करने से समच्छेद $=\frac{१२}{६०}+\frac{१५}{६०}+\frac{२०}{६०}+\frac{३०}{६०}+\frac{१०}{६०}$ इनका योग करने से $\frac{८७}{६०}=\frac{२९}{२०}$ इसको फिर ३ में घटाने के लिये "अहारराशौ रूपं (१) हरः कल्प्य" इस नियम से $\frac{३}{१}-\frac{२९}{२०}$, समच्छेद करके $\frac{६०}{२०}-\frac{२९}{२०}=\frac{३१}{२०}$ अन्तर हुआ ॥ अथवा "छेदघ्नरूपेषु" इत्यादि प्रकार से भी $३-\frac{२९}{२०}=\frac{३१}{२०}$ यही सिद्ध होता है।

इति भिन्नसंकलितव्यवकलिते।

---

अथ भिन्नगुणने करणसूत्रम्—

**अंशाहतिश्छेदवधेन भक्ता लब्धं विभिन्ने गुणने फलं स्यात् ॥४॥**

सं०—विभिन्ने गुणने अंशाहतिश्छेदवधेन भक्ता लब्धं गुणनफलं स्यात्।

भा०—जिन भिन्न संख्याओं के गुणन करना हो उनके अंशों को परस्पर गुना करके उसमें हरों के घात के भाग देने से लब्धि भिन्न गुणनफल होता है॥

जैसे—$\frac{१५}{४}$ को $\frac{१२}{५}$ से गुना करने से क्या होगा ? इस प्रश्न में अंशों (१५ और १२) को परस्पर गुना करके उसमें हरों (४ और ५) के

